# फिट् सूत्राणि

https://sa.wikisource.org/s/iin

अथ फिट् सूत्राणि

फिषोऽन्त उदात्त १

पाटलापालङ्काम्बासागरार्थानाम् २

गेहार्थानामस्त्रियाम् ३

गुदस्य च ४

ध्यपूर्वस्य स्त्रीविषयस्य ५

खान्तस्याश्मादेः ६

बहिष्ठवत्सरतिशत्थान्तानाम् ७

दक्षिणस्य साधौ ८

स्वाङ्गाख्यायामादिर्वा ९

छन्दसि च १०

कृष्णस्यामृगाख्या चेत् ११

वा नामधेयस्य १२

शुक्लगौरयोरादिः १३

अगुष्ठोदकबकवशानां छन्दस्यन्तः १४

पृष्ठस्य च १५

अर्जुनस्य तृणाख्या चेत् १६

अर्यस्य स्वाम्याख्या चेत् १७

आशाया अदिगाख्या चेत् १८

नक्षत्राणामाव्विषयाणाम् १९

न कुपूर्वस्य कृतिकाख्या चेत् २०

घृतादीनां च २१

ज्येष्ठकनिष्ठयोर्वयसि २२

विलवतिष्ययोः स्वरितो वा २३

इति फिट्सूत्रेषु प्रथमः पादः

**द्वितीयः पादः**

अथादिः प्राक् शकटेः १

ह्रस्वान्तस्य स्त्रीविषयस्य २

नब्बिषयस्यानिसन्तस्य ३

तृणधान्यानां च दव्यषाम् ४

चः संख्यायाः ५

स्वाङ्गशिटामदन्तानाम् ६

प्राणिनां कुपूर्वम् ७

खय्युवर्णं कृत्रिमाख्या चेत् ८

उनर्वत्रन्तानाम् ९

वर्णानां तणतिनितान्तानाम् १०

ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ११

अक्षस्यादेवनस्य १२

अर्धस्यासमद्यो त्रे १३

पीतद्व्रर्थानाम् १४

ग्रामादीनां च १५

लुवन्त स्योपमेयनामधेयस्य १६

न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् १७

राजविशेषस्य यमन्वा चेत् १८

लघावन्ते द्वयौश्च बह्वषो गुरुः १९

स्त्रीविषयवर्णाक्षुपूर्वाणाम् २०

शकुनीनां च लघु पूर्वम् २१

नर्तुप्राण्याख्यायाम् २२

धान्यानां च वृद्धक्षान्तानाम् २३

जनपदशब्दानामषान्तानाम् २४

हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा २५

इगन्तानां च द्व्यषाम् २६

इति फिट्सूत्रेषु द्वितीय पादः

**तृतीयः पादः**

अथ द्वितीयं प्रागीषात् १

त्र्यचां प्राङ्मकरात् २

स्वाङ्गानामकुर्वादीनाम् ३

मादीनां च ४

शादीनां शाकानाम् ५

पान्तानां गुर्वादीनाम् ६

युतान्यण्यन्तानाम् ७

मकरवरूढपारवेतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा ८

छन्दसि च ९

कर्दमादीनां च १०

सुगन्धितेजनस्य ते वा ११

नपः फलान्तानाम् १२

यान्तस्यान्त्यात्पूर्वम् १३

थान्तस्य च नालघुनी १४

शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च १५

सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् १६

ईषान्तस्य हयादेरादिर्वा १७

उशीरदाशेरकपालपलालशैवालश्यामाकशारोरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् १८

महिष्याषाढयोर्जायेष्टकाख्या चेत् १९

इति फिट्सूत्रेषु तृतीयः पादः

**चतुर्थः पादः**

शकटिशकट्योरक्षरमक्षरं पर्यायेण १

गोष्ठजस्य ब्राह्मणनामधेयस्य २

पारावतस्योपोत्तमवर्जम् ३

धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम् ४

कपिकेशहरिकेशयोश्छन्दसि ५

न्यङ्स्वरौ स्वरितौ ६

न्यर्बुदव्यल्कशयोरादिः ७

तिल्यशिक्यमत्यकार्ष्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः ८

विलवभक्ष्यवीर्याणि छन्दसि ९

त्वत्त्वसमसिमेत्यनुच्चानि १०

सिमस्याथर्वणेऽन्त उदात्तः ११

निपाता आद्युदात्ताः १२

उपसर्गाश्चाभिवर्जम् १३

एवादीनामन्तः १४

वाचादीनामुभावुदात्तौ १५

चादयोऽनुदात्ताः १६

यथेति पादान्ते १७

प्रकारादिद्विरुक्तौ १८

शेषं सर्वमनुदात्तं १९

इति फिट्सूत्रेषु तुरीयः पादः